बहुवचनं च । बहुलं । छंदसीति शपः श्लुः । गमहनेत्यादिनो-
पधालोपः । अभ्यासस्य घत्वं । निगागमश्च । आगनीगंतीति
च । पा० ७. ४. ६५. । इति चशब्दः प्रकारार्थं इत्युक्तत्वाद्दाध-
र्त्यादावेतद्द्रष्टव्यं ॥

॥ इति प्रथमस्य चतुर्थे एकोनविंशो वर्गः ॥

षष्ठीमृचमाह ॥

स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा
विनाशयन् ।
ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः
सृजत् ॥ ६ ॥

सः । हि । श्रवस्युः । सदनानि । कृत्रिमा । क्ष्मया ।
वृधानः । ओजसा । विऽनाशयन् ।
ज्योतींषि । कृण्वन् । अवृकाणि । यज्यवे । अव । सुऽक्रतुः ।
सर्तवै । अपः । सृजत् ॥ ६ ॥

श्रवस्युरन्नं यशो वात्मन इच्छन् कृत्रिमा कृत्रिमाणि
क्रियया निर्वृत्तानि सदनान्यसुरपुराण्योजसा बलेन विनाशयन्
क्ष्मया भूम्या समानं वृधानो वर्धनशीलः । यद्वा क्ष्मयेत्योजो-
विशेषणं । शत्रूणामभिभवित्रा बलेनेत्यर्थः । ज्योतींषि सूर्या-
दीनि वृत्तेणावृतान्यवृकाणि वृकेणावरकेण तेन रहितानि
कृण्वन् । कुर्वन् । सुक्रतुः शोभनकर्मसहित एवंविधः स
खल्विंद्रो यज्यवे यष्ट्रे यजमानाय तदर्थं सर्तवै सरणायापो वृष्टि-
लक्षणान्युदकान्यवसृजत् । वृष्टिं कृतवानित्यर्थः ॥ कृत्रिमा ।
डुकृञ् करणे । ड्वितः क्त्रिः । पा० ३. ३. ८८. । इति भावे

क्निप्रत्ययः । त्रेर्मम्नित्यं । पा° ४. ४. २०. । इति निर्वृत्तार्थे मप् । तस्य पित्त्वादनुदात्तत्वे क्निप्रत्ययस्वर एव शिष्यते । ग्रेश्छंदसि बहुलमिति ग्रेर्लोपः । क्षमया । क्षमूष् सहने । क्षमते प्राणिजातकृतमुपद्रवमिति क्षमा । षिद्भिदादिभ्योऽङित्यङ्-प्रत्ययः । ततष्टाप् । व्यत्ययेन धातोरुपधालोपः । छांदसं विभक्त्युदात्तत्वं । यद्वा । अयं धातुरभिभवार्थः । षह अभिभव इति सहनस्याभिभवार्थत्वात् । अस्मादौणादिको मनिन् । व्यत्ययेन स्त्रीलिंगता । मनः । पा° ४. १. ११. । इति ङीपो निषेधे डाबुभाभ्यामन्यतरस्यां । पा° ४. १. १३. । इति डाप् । टिलोपः । वृधानः । ताच्छीलिकश्चानश् । बहुलं छंदसीति शपो लुक् । चित इत्यंतोदात्तत्वं । अवृकाणि । वृञ् वरणे । सृवृभूशुषि-मुषिभ्यः कक् । उ° ३. ४६. । इति कक्प्रत्ययः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । यज्यवे । यजिमनिशुंधि-दसिजनिभ्यो युरिति युप्रत्ययः । वृषादेराकृतिगणत्वादाद्यु-दात्तत्वं । सुक्रतुः । बहुव्रीहौ । क्रत्वादयश्चेत्युत्तरपदाद्यु-दात्तत्वं । सर्तवे । सृ गतौ । कृत्यार्थे तवैकेनिति भावे तवे-प्रत्ययः । गुणः । अंतश्च तवै युगपदित्याद्यंतयोर्युगपदुदात्तत्वं । अप्सः । जिदिर्मिति मस उदात्तत्वं । सृजत् । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

सप्तमीमृचमाह ॥

दानाय मनः सोमपावन्नस्तु तेऽर्वांचा हरी वंदनश्रुदा
कृधि ।
यमिष्ठासः सारथयो य इंद्र ते न त्वा केता आ दभ्नुवंति
भूर्णयः ॥ ७ ॥

त्वित्यादिनोवङादेशः । भूर्णयः । भृञ् भरणे । घृणिपृश्निरि-
त्यादावस्मान्निप्रत्ययांतो निपात्यते । अत उत्वं दीर्घश्च ।
यद्वा भृ भय इत्यस्मात्कृत्यल्युटो बहुलमिति कर्तरि क्तिन्युदोष्ठ्य-
पूर्वस्येत्युत्वं । हलि चेति दीर्घः । ऋकारल्वादिभ्यः क्तिन्निष्ठा-
वद्भवति । पा० ८. २. अ४. १. । इति निष्ठावद्भावान्नत्वं ।
नित्वादाद्युदात्तत्वं ॥

अष्टमीमृचमाह ॥

अप्रच्छितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इंद्र भूरयः ॥८

अप्रऽच्छितं । वसु । बिभर्षि । हस्तयोः । अषाळ्हं । सहः ।
तन्वि । श्रुतः । दधे ।
आऽवृतासः । अवतासः । न । कर्तृऽभिः । तनूषु । ते ।
क्रतवः । इंद्र । भूरयः ॥ ८ ॥

हे इंद्र त्वमप्रच्छितं प्रच्यवरहितं वसु धनं हस्तयोर्बिभर्षि ।
स्तोतृभ्यो दातुं धारयसि । तथा श्रुतः प्रख्यातो भवांस्तन्व्या-
त्मीये शरीरेऽषाळ्हं शत्रुभिरनभिभूतं सहो बलं दधे ।
धारयति । त्वदीयास्तनवः कर्तृभिर्वृत्रादेरसुरस्य वधं कुर्वद्भिर्बल-
कृतैः कर्मभिरावृतास आवृताः । बलकृतानि सर्वाणि कर्माण्ये-
तस्य शरीरमावृत्यावतिष्ठंते । तत्र दृष्टांत । अवतासो न ।
अवत इति कूपनाम । यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणि-
भिराव्रियंते तद्वत् । यस्मादेवं तस्मात् हे इंद्र ते तव शरीरेषु
क्रतवः कर्माणि भूरयो बहूनि विद्यंते ॥ अप्रच्छितं । च्छि चय
इत्यस्माद्भावे निष्ठा । अण्यदर्थं इति पर्युदासाद्दीर्घाभावः ।
अत एव च्छियो दीर्घादिति निष्ठानत्वाभावः । प्रकृष्टं च्छितं

दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वांचा । हरी इति । वंदनऽश्रुत् । आ । कृधि ।
यमिष्ठासः । सारथयः । ये । इंद्र । ते । न । त्वा । केताः । दभ्नुवंति । भूर्णयः ॥ ७ ॥

हे सोमपावन् सोमस्य पातरिंद्र ते त्वदीयं मनो दानायास्मदभिमतफलप्रदानायास्तु । भवतु । हे वंदनानां स्तुतीनां श्रोतः । हरी त्वदीयावश्वावर्वांचास्मदभिमुखावाकृधि । आभिमुख्येन कुरु । हे इंद्र ते तव स्वभूता ये सारथयः संति ते यमिष्ठासोऽतिशयेन यंतारः । अश्वनियमनकुशला इत्यर्थः । यस्मादेवं तस्मात्केताः प्रातिकूल्यज्ञातारो भूर्णयः स्वकीयायुधादीनां भर्तारः । यद्वा भीतास्त्वोच्याः शत्रवस्त्वा त्वां नादभ्नुवंति । न हिंसंति ॥ सोमपावन् । आतो मनिन्निति वनिप् । असंबुद्धाविति पर्युदासाद्दीर्घाभावः । अर्वांचा । सुपां सुलुगिति विभक्तेराकारः । वंदनश्रुत् । वदि अभिवादनस्तुत्योः । इदित्वान्नुम् । भावे ल्युट् । तेषां श्रोता । श्रु श्रवणे । क्विपि तुगागमः । यमिष्ठासः । यंतुः शब्दात्तुश्छंदसीतीष्ठन्प्रत्ययः । तुरिष्ठेमेयःस्विति तृलोपः । नित्त्वादाद्युदात्तत्वं । आज्जसेरसुगित्यसुक् । सारथयः । सर्तेर्णिच्च । उ० ४. ८०. । इति अथिन्प्रत्ययो णिल्लोपश्च । नित्त्वादाद्युदात्तः । केताः । कित ज्ञाने । चिकेततीति प्रतिकूलं जानंतीति केताः । पचाद्यच् । वृषादेराकृतिगणत्वादाद्युदात्तत्वं । यद्वा प्रतिकूलतया ज्ञायंत इति केताः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वं । दभ्नुवंति । दंभु दंभे । स्वादित्वाच्छ्नुः । तस्य ङित्त्वादनिदितामिति नलोपः । संयोगपूर्वत्वेन हुश्नुवोरिति यणादेशाभावेऽचि श्नु धा-